# न्यासविंशतिः

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।

वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

सिद्धं सत्संप्रदाये स्थिरधियमनघं श्रोत्रियं ब्रह्मनिष्ठं

सत्त्वस्थं सत्यवाचं समयनियतया साधुवृत्त्या समेतम् ।

डम्भासूयादिमुक्तं जितविषयगणं दीर्घबन्धुं दयालुं

स्खालित्ये शासितारं स्वपरहितपरं देशिकं भूष्णुरीप्सेत् ॥ १॥

अज्ञानध्वान्तरोधादघपरिहरणादात्मसाम्यावहत्वात्

जन्मप्रध्वंसि जन्मप्रदगरिमतया दिव्यदृष्टिप्रभावात् ।

निष्प्रत्यूहानृशंस्यान्नियतरसतया नित्यशेषित्वयोगात्

आचार्यः सद्भिरप्रत्युपकरणधिया देववत् स्यादुपास्यः ॥ २॥

सद्भुद्धिः साधु सेवी समुचितचरितस्तत्वबोधाभिलाषी

शुश्रूषुस्त्यक्तमानः प्रणिपतनपरः प्रश्नकालप्रतीषः ।

शान्तो दान्तोऽनसूयुः शरणमुपगतः शास्त्रविश्वासशाली

शिष्य प्राप्तः परीक्षां कृतविदभिमतं तत्त्वतः शिक्ष्णणीयः ॥ ३॥

स्वाधीनाशेषसत्ता स्थितियतनफलं विद्धि लक्ष्मीशमेकं

प्राप्यं नान्यं प्रतीया न च शरणतया कञ्चिदन्यं वृणीयाः ।

एतस्मादेव पुंसां भयमितरदपि प्रेक्ष्य मोज्झीस्तदज्ञां

इत्येकान्तोपदेशः प्रथममिह गुरोरेकचित्तेन धार्यः ॥ ४॥

मोक्षोपायार्हतैवं भवति भवभृतां कस्यचित् क्वाऽपि काले
तद्वद् भक्तिप्रपत्त्योरधिकृति नियमस्तादृशा स्यान्नियत्या ।
शक्ताशक्तादि तत्तत्पुरुषविषयतः स्थाप्यते तद्व्यवस्था
यच्चाहुस्तद्विकल्पः सम इति कतिचित् तत् फलस्याविशेषात् ॥ ५॥

सानुक्रोशे समर्थे प्रपदनमृषिभिः स्मर्यतेऽभीष्टसिद्ध्यैः
लोकेऽप्येतत् प्रसिद्धं न च विमतिरिह प्रेक्ष्यते क्वाऽपि तन्त्रे ।
तस्मात् कैमुत्य सिद्धं भगवति तु भरन्यासविद्यानुभावम्
धर्मस्थेयाः च पूर्वे स्वकृतिषु बहुधा स्थापयांचक्रुरेवम् ॥ ६॥

शास्त्रप्रमाण्यवेदी ननु विधिविषये निर्विशङ्कोऽधिकारी
विश्वासस्याङ्गभावे पुनरिह विदुषा किं महत्वं प्रसाध्यम् ।
मैवं घोरापराधैर्ः सपदि गुरुफले न्यासमात्रेण लभ्ये
शङ्का पार्ष्णि ग्रहार्हा शमयितुमुचिता हेतुभिस्तत्तदर्है ॥ ७॥

नेहाभिक्रान्ति नाशो न च विमतिरिह प्रत्यवायो भवेदिति
उक्तं कैमुत्य नीत्या प्रपदनविषये योजितं शास्त्रविद्भिः ।
तस्मात् क्षेत्रे तदर्ह सुविदितसमयैर्देशिकैः सम्यगुप्तं
मन्त्राख्यं मुक्तिबीजं परिणति वशतः कल्पते सत्फलाय ॥ ८॥

न्यासः प्रोक्तोऽतिरिक्तं तप इति कथितः स्वध्वरश्चास्य कर्ता

अहिर्बुध्न्योप्यन्ववादीदगणि दिविषदामुत्तमं गुह्यमेतत् ।
साक्षान्मोक्षाय चासौ श्रुत इह तु मुधा बाध शङ्का गुणाढ्ये
तन्निष्टो ह्यन्यनिष्ठान् प्रभुरतिशयितुं कोटिकोट्यंशतोऽपि ॥ ९॥

नानाशब्दादिभेदादिति तु कथयता सूत्रकारेण सम्यक्
न्यासोपासे विभक्ते यजनहवनवच्छब्दभेदादभाक्तात् ।
आख्या रूपादिभेदः श्रुत इतरसमः किञ्च भिन्नोऽधिकारः
शीघ्रप्राप्त्यादिभिः स्याज्जगुरिति च मधूपासनादौ व्यवस्थाम् ॥ १०॥

यत्किञ्चिद्रक्षणीयं तदवन निपुणे न्यस्यतोऽकिञ्चनस्य
प्रस्पष्टं लोकदृष्ट्याऽप्यवगमित इह प्रार्थनादङ्गयोगः ।
तस्मात् कर्माङ्गकत्वं व्यपनयति परापेक्षणाभाववादः
साङ्गे त्वष्टाङ्गयोगव्यवहृति नयतः षड्विधत्वोपचारः ॥ ११॥

पञ्चाप्यङ्गान्यभिज्ञाः प्रणिजगुरविनाभाव भाञ्जि प्रपत्तेः
कैश्चित् संभावितत्वं यदिह निगदितं तत् प्रपत्त्युत्तरं स्यात् ।
अङ्गेष्वङ्गित्ववादः फलकथनमिह द्वित्रिमात्रोक्तयश्च
प्राशस्त्यं तत्र तत्र प्रणिदधति ततः सर्ववाक्यैककण्ठ्यम् ॥ १२॥

रक्षोपेक्षा स्वसाह्य प्रणयवति भरन्यास आज्ञादि दक्षे
दृष्टा नाऽत्र प्रपत्ति व्यवहृतिरिह तन्मेलने लक्षणं स्यात् । var तन्मेलनं
गेहागत्यदि मात्रे निपततु शरणागत्यभिख्योपचारात्
यद्वानेकार्थभावाद्भवति च विविधः पालनीयत्वहेतुः ॥ १३॥var यद्वा नैकार्थं, हि

आत्मात्मीयस्वरूपन्यसनमनुगतं यावदर्थं मुमुक्ष्शोः
तत्वज्ञानात्मकं तत् प्रथममथ विधेः स्यादुपाये समेतम् ।
कैङ्कर्याख्ये पुमर्थेऽप्यनुषजति तदप्यर्थना हेतुभावात्
स्वाभीष्टानन्यसाध्यावधिरिह तु भरन्यासभागोऽङ्गिभूतः ॥ १४॥

न्यसादेशेषु धर्मत्यजनवचनतोऽकिञ्चनाधिक्रियोक्ता
कार्पण्यम् वाऽङ्गमुक्तं भजनवदितरापेक्षणं वाऽप्यपोढम् ।
दुःसाधेच्छोद्यमौ वा क्वचिदुपशमितवन्यसंमेलने वा
ब्रह्मास्त्रन्याय उक्तस्तदिह न विहतो धर्म आज्ञादि सिद्धः ॥ १५॥

आदेष्टुं स्वप्रपत्तिं तदनुगुणगुणाद्यन्वितं स्वं मुकुन्दो
मामित्युक्त्वैकशब्दं वदति तदुचितं तत्र तात्पर्यमूह्यम् ।
तत्प्राप्य प्रापकैक्यं सकलफलदतां न्यासतोऽन्यानपेक्षाम्
प्राधान्याद्यं च किञ्चित् प्रथयति स परं श्रीसखे मुक्त्युपाये ॥ १६॥

स्वाभीष्टप्राप्तिहेतुः स्वयमिह पुरुषैः स्वीकृतः स्यादुपायः
शास्त्रे लोके च सिद्धः स पुनरुभयथा सिद्धसाध्यप्रभेदात् ।
सिद्धोपायस्तु मुक्तौ निरवधिकदयः श्रीसखः सर्वशक्तिः
साध्योपायस्तु भक्तिर्न्यसनमिति पृथक् तद्वशीकारसिद्ध्यै ॥ १७॥

अत्यन्ताकिञ्चनोऽहं त्वदपचरणतः सन्निवृत्तोऽद्य नाथ
त्वत्सेवैकान्तधीः स्यां त्वमसि शरणमित्यध्यवस्यामि गाढम् ।

त्वम् मे गोपायिता स्यास्त्वयि निहितभरओऽस्म्येवमित्यर्पितात्मा
यस्मै स न्यस्तभारः सकृदथ तु सदा न प्रयस्येत् तदर्थम् ॥ १८॥ var सकृदिति तु

त्यक्त्वोपायानपायानपि परमजहन्मध्यमां स्वार्हवृत्तिम्
प्रायश्चित्तं च योग्यं विगतऋणततिर्द्वन्द्ववात्यां तितिक्षुः ।
भक्तिज्ञानादिवृद्धिं परिचरणगुणान् सत्समृद्धिं च युक्तां var युक्त्या
नित्यं याचेदनन्यस्तदपि भगवतस्तस्य यद्वाऽऽप्तवर्गात् ॥ १९॥

आज्ञा कैङ्कर्यवृत्तिष्वनघ गुरुजनप्रक्रिया नेमिवृत्तिः
स्वार्हानुज्ञातसेवा विधिषु च शकने यावदिष्टं प्रवृत्तः ।
कर्मप्रारब्धकार्यं प्रपदनमहिमध्वस्तशेषं द्विरूपं
भुक्त्वा स्वाभीष्टकाले विशति भगवतः पादमूलं प्रपन्नः ॥ २०॥

श्रुत्या स्मृत्यादिभिश्च स्वयमिह भगवद्वाक्यवर्गैश्च सिद्धां
स्वातन्त्र्ये पारतन्त्र्येऽप्यनितरगतिभिः सद्भिरास्थीयमानाम् ।
वेदान्ताचार्य इत्थं विविधगुरुजनग्रन्थसंवादवत्या
विंशत्या न्यासविद्यां व्यवृणुत सुधियां श्रेयसे वेङ्कटेशः ॥ २१॥

संसारावर्तवेगप्रशमनशुभदृग्देशिक प्रेक्षितोऽहं
संत्यक्तोऽन्यैर् उपायैरनुचितचरितेष्वद्य शान्ताभिसन्धिः ।
निःशङ्कस्तत्वदृष्ट्या निरवधिकदयं प्रार्थ्य संरक्षकं त्वां var प्राप्य
न्यस्य त्वत्पादपद्मे वरद निजभरं निर्भरो निर्भयोऽस्मि ॥ २२॥

कवितार्किकसिंहाय कल्याणगुणशालिने ।

श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

न्यासविंशति व्याख्या

श्रीमन्निगमान्तमहादेशिकेः स्वयमनुगृहीता न्यासविंशति व्याख्या

श्रीः

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।

वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

श्रुतिस्मृत्यादितात्पर्यं निरूढा न्यासविंशतिः ।

स्वय व्याक्रियतेऽस्माभिः दिङ्मात्रेण सदिच्छया ॥